**हेत्वाभासाश्च यथोक्ताः ।**

हेत्वाभासास्तु पूर्वोक्तलक्षणैरेव लक्षिताः ।
निग्रहस्थानतां यान्ति, यथोक्ता इत्यतोऽब्रवीत् ॥
प्रमाणस्य प्रमेयत्वं प्रमेयस्य प्रमाणता ।
5 यथा लक्षणभेदेन न तथैतेषु दृश्यते ॥
भेदेनोक्ताः किमर्थं त इति निगदिता पूर्वमेवात्र युक्ति-
र्वादे ह्येते प्रयोज्याः प्रगुणनयविदा तत्त्वशुद्धिं विधातुम् ।
एतेषां धर्मकीर्तेरपि च न विमतिर्निग्रहस्थानताया-
मित्थं द्वाविंशतिर्नो गुरुभिरभिहिता निग्रहस्थानभेदाः ॥

10 **उपसंहारः**

इत्येवं सूत्रकारागममनुसरतानुज्झता भाष्यभूमिं
स्थाने स्थाने परेषां मतमतुलगति क्षिण्वला तार्किकाणाम् ।
काञ्चिद्वाक्यार्थचर्चामपि विरचयतानुक्रमेणावतीर्णा
निर्णीताः स्वे निबन्धे निपुणमिह मया षोडशैते पदार्थाः ॥
15 न्यायोद्गारगभीरनिर्मलगिरा गौरीपतिस्तोषितो
वादे येन किरीटिनेव समरे देवः किराताकृतिः ।
प्राप्तोदारवरस्ततः स जयति ज्ञानामृतप्रार्थना-
नाम्नानेकमहर्षिमस्तकवलत्पादोऽक्षपादो मुनिः ॥

---

**पूर्वोक्तलक्षणैरेव लक्षिता** इति । पूर्वोक्तानि यानि हेत्वाभासानां लक्षणानि तैरेव,
20 न निग्रहस्थानत्वेन पृथग् लक्षणान्तरप्रणयनं कार्यम् । प्रमाणस्य प्रमितिविषयत्वेन प्रमेयत्वम्, प्रमेयस्य प्रमितिकरत्वेन प्रमाणत्वं यथा न स्वरूपेणैव नैवं हेत्वाभासानां निग्रहस्थानत्वम्, हेत्वाभासरूपतयैव तेषां निग्रहस्थानत्वमित्यर्थः ।

**धर्मकीर्तेरपि च न विमतिः** इति । स ह्याह "हेत्वाभासाश्च यथान्यायाद् निग्रहस्थानमित्येतावन्मात्रमिष्टम्" इति ।

52

भट्टश्रीशङ्करात्मजचक्रधरकृते
न्यायमञ्जरीग्रन्थिभङ्गे
द्वादशमाह्निकम्

वादेष्वाप्तजयो जयन्त इति यः ख्यातः सतामग्रणी-
रन्वर्थो नववृत्तिकार इति यं शंसन्ति नाम्ना बुधाः ।
सूनुर्व्याप्तदिगन्तरस्य यशसा चन्द्रस्य चन्द्रत्विषा
चक्रे चन्द्रकलावचूलचरणध्यायी स धन्यां कृतिम् ॥

नमः शशिकलाकोटिकल्प्यमानाङ्कुरश्रिये । 5
प्रपन्नजनसंकल्पकल्पवृक्षाय शम्भवे ॥

**इति श्रीजयन्तभट्टकृतायां न्यायमञ्जर्यां द्वादशमाह्निकम् ।**

**॥ समाप्ता चेयं न्यायमञ्जरी ॥**

## प्रथमं परिशिष्टम्

# प्रसङ्गादुद्धृतानि श्रुति-स्मृति-सूत्रवचनानि

## द्वितीयं परिशिष्टम्

# ग्रन्थेऽस्मिन् चर्चितानां स्मृतानाञ्च ग्रन्थकर्तृणां वर्णानुक्रमेण नामानि

## तृतीयं परिशिष्टम्

# प्रसङ्गादुद्धृतानां ग्रन्थानां वर्णानुक्रमेण नामानि

## चतुर्थं परिशिष्टम्

# विशिष्टपारिभाषिकशब्दाः

| विशिष्टशब्दाः | पृष्ठाङ्काः |
|---|---|
| अन्वयव्यतिरेकी | ९२ |
| अनैकान्तिकः | १७४ |
| अरुणाम्बराणाम् | ५३ |
| अर्थवादः | २७ |
| आख्यायिका | १३ |
| उत्तरपाक्षिकः | १९८ |
| ऊर्मिषट्कः | २ |
| ऐकान्तिकः | १२४ |
| कणव्रतमते | ८० |
| कथाप्रसङ्गाच्च | २०० |
| कश्मीरेषु | ७८ |
| कुलव्रतम् | २३ |
| केवलव्यतिरेकी | ९३ |
| केवलान्वयी | ९२ |
| कौण्डपायिनाम् | १११ |
| कौरुकुची | ६ |
| क्षीरहोता | १३ |
| गन्धर्वनगरम् | ४८ |
| छलवादी | १४५ |
| डिण्डिकरागम् | १०० |
| तपस्वी | २०० |
| तीर्थान्तरे | १२८ |
| त्रिशङ्कुः | १०९ |
| नीतिविदः | ९३ |
| न्यायविशेषात् | ११४ |
| पक्षधर्मान्वयः | १३१ |